# Document Information

Text title : gangAstuti
File name : gangAstuti.itx
Location : doc_devii
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Dinesh Agarwal dinesh.garghouse at gmail.com
Proofread by : Dinesh Agarwal dinesh.garghouse at gmail.com
Latest update : May 16, 2013
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ गङ्गास्तुती ॥

श्रीगणेशाय नमः ॥

ब्रह्मोवाच –
नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ॥ १॥

नमस्ते विश्वरूपिण्यै ब्रह्मामूर्त्यै नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २॥

सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते ।
स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो नमः ॥ ३॥

भोगोपभोगदायिन्यै भोगवत्यै नमो नमः ।
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥ ४॥

नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमो नमः ।
नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमो नमः ॥ ५॥

नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः ।
नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ ६॥

बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः ।
नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥ ७॥

पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ।
शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥ ८॥

उस्रायै सुखदोग्ध्र्यै च सञ्जीविन्यै नमो नमः ।
ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ।
प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते ॥ ९॥

सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥ १०॥

शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तुते ॥ ११॥

निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ।
परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ॥ १२॥

गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः ।
गङ्गे मे पार्श्वयोरेहि त्वयि गङ्गेऽस्तु मे स्थितिः ॥ १३॥

आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे ।

त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥ १४॥

गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ।
य इदं पठति स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥ १५॥

श्रृणुयाच्छ्रद्धया युक्तः कायवाक्चित्तसम्भवैः ।
दशधासंस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥ १६॥

सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लियते ।
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥ १७॥

तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ १८॥

सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ।
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ १९॥

परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ।
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ॥ २०॥

असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ।
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ॥ २१॥

वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।
एतानि दश पापानि हर त्वं मम जाह्नवि ॥ २२॥

दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ।
त्रयस्त्रिंशच्छतं पूर्वान् पितृनथ पितामहान् ॥ २३॥

उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता ॥ २४॥

नमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै ।
शिवायै दक्षायै अमृतायै विश्वरूपिण्यै नन्दिन्यै ते नमो नमः ॥ २५॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् ।
विधिहरिहररूपां सेन्दुकोटीरजुष्टां
कलितसितदुकूलां जाह्नवीं तां नमामि ॥ २६॥

आदावादिपितामहस्य निगमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ २७॥

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २८॥
इति धर्माब्धिस्था गङ्गास्तुतिः सम्पूर्णा ॥

---

Encoded and proofread by Dinesh Agarwal dinesh.garghouse at gmail.com
Proofread by PSA EASWARAN psaeaswaran at gmail.com

---



---

.. Gangastuti ..
was typeset on August 2, 2015

Please send corrections to *sanskrit@cheerful.com*

